# ॥ अवतारत्रयस्तोत्रम् ॥

पालयस्व निपालयस्व निपालयस्व रमापते ।
वादिराजमुनींद्रवंदित वाजिवक्त्र नमोऽस्तु ते ॥ प ॥

मध्वहृत्कमलस्थितं वरदायकं करुणाकरं
लक्ष्मणाग्रजमक्षयं दुरितक्षयं कमलेक्षणम् ।
रावणांतकमव्ययं वरजानकीरमणं विभुं
अंजनासुतपाणिकंजनिषेवितं प्रणमाम्यहम् ॥ १ ॥

देवकीतनयं निजार्जुनसारथिं गरुडध्वजं
पूतनाशकटासुरादिखलांतकं पुरुषोत्तमम् ।
दुष्टकंसनिमर्दनं वररुग्मिणीपतिमच्युतं
भीमसेनकरांबुजेन सुसेवितं प्रणमाम्यहम् ॥ २ ॥

ज्ञानमुक्तिसुभक्तिदं वरबादरायणमव्ययं
कोटिभास्करभासमानकिरीटकुंडलमंडितम् ।
वाक्सुदर्शनतः कलेः शिरघातकं रमया युतं
मध्वसत्करकंजपूजितमक्षयं प्रणमाम्यहम् ॥ ३ ॥

॥ इति श्रीवादिराजपूज्यचरणविरचितं अवतारत्रयस्तोत्रम् ॥